जलरुहं जलाज्जायते जलाज्जलरुहं नहि व्यासिमत्र ताम् ।
इति विधेर्हरस्यम्ब भीतिभिः शिवमुखाब्जजा त्वं सती भुवि ।
पशुपतेः स्फुटं त्वां दयामहं जननि वेद्मि यत्त्वामुपागताः ।
शिवपुरे जना भस्मधारणाः शशिविभूषणा नन्दिवाहनाः ॥
जलकणैर्युतो मारुतो वहन्नयति शुद्धतां दिग्विदिक्स्थितान् ।
जननि जन्मिनः पातकात्मनः सुरपुरेन्ततः स्पर्शमात्रतः ॥४॥
तव जलं समाश्रित्य यो जनः शिशिर आगते कम्पते ततः ।
स्मरशरव्यथाकम्पनं जनाद्धरत उर्वशीमुख्यनायिकाः ॥५॥
पतति यज्जले वस्तु तल्लघु किमपि यत्र वाःपूर एति तम् ।
ननु यतो भवत्यम्ब तत्र किं त्वयि पतज्जनस्त्वेति तं शिवम् ॥
जलगतं च यत्तच्च मज्जति गुरु किलेह यस्त्वज्जले जनः ॥
जननि पातकाद्योघसंचितो भवति मग्न उन्मज्जतीश्वरि ॥७॥
धनविसर्जनं देवतार्चनं जननि तर्पणं पिण्डपातनम् ॥
तव तटे जनो यत्करोत्ययं भवति तस्य तत्पुण्यमक्षयम् ॥८॥
तव जलामृतं हस्तसंभृतं यदिह संततं पीयतेमृतम् ।
जननि मन्यते तन्न चामृतं जलधिनिःसृतं देवतामृतम् ॥९॥
तव तटे जनन्यत्र वासतः पशुपतिर्जगन्मुक्तये स्थिराम् ॥
परिहरत्यहो विश्वनाथसत्कृतसुरापगां काशिकावहाम् ॥१०॥
तव तटोदरे तीर्थकोट्यस्तदुपवर्णने चेच्चतुर्मुखः ॥
दशशताननः स्यामहं तदा किमु भवेयमीदृक्तु न क्षमः॥११
पशुपतिः शिवो ज्योतिरीश्वरः सकलसिद्धिदा गुह्यकालिका ।
विजयते मुदा त्वत्तटे सदा त्वमिह सर्वदात्रेति नाद्भुतम् ॥
सलिलसन्निधौ दैवयोगतो मृतिमुपागता ये चराचराः ।
विरहिता अमी कोटिजन्मसंचितमलैर्व्रजन्तीशपत्तने ॥१३॥
शिव जगत्पते पार्वतीपते पशुपते महादेव शंकर ।
इति सुजल्पतोऽहर्निशं मम भवतु त्वत्तटे गङ्गिके स्थितिः ॥
तव जलेथवा जन्हुजाजले शिव शिवेति वा राम राम वा ।
मरणसन्निधौ जिह्विका मम वदतु ते स्तुतेरम्ब पाठतः ॥१६॥
त्वदमलाम्बुनो नित्यसेवनं वृजिननाशनं दुःखदारणम् ।
भविकभावनं मुक्तिकारणं शरणमेमि तां वाग्वतीमहम्॥१६॥
सुरेन्द्ररामहृदयस्य सुतेन भक्त्या
वाणीविलासविदुषा रचितस्तवोऽयम् ॥
अस्योषसि प्रपठनाद्भवतु प्रसन्ना
श्रीवाग्वती वरनदी निखिलाघहन्त्री ॥१७॥
इतिश्रीमन्महाराजाधिराजराज्ञ्याः श्रीललितत्रिपुरसुन्दरीदेव्या आज्ञया रामहृदयपण्डितात्मजवाणीविलासपण्डितकृतं वाग्वतीस्तोत्रम् । शुभम् ।

( थापाथलीवाग्वतीसाँधुपश्चिमतीरका सिंहकेतुका अभिलेखबाट सं. सन्देश. अं. ७ )

## गुह्यकालीसहस्रनाम

ॐ नमः श्रीगुरवे ॥ अगस्त्य उवाच ॥
कार्त्तिकेय त्वया प्रोक्ता गुह्येशी दक्षिणे तटे ।
वाग्वत्याः सरितः श्रीमन्नेपाले पीठसत्तमे ॥१॥
साम्प्रतं श्रोतुमिच्छामि, तस्या नामसहस्रकम् ।
ब्रूहि देव महाभाग, लोकानुग्रहकांक्षया ॥२॥
स्कन्द उवाच—
पुरा श्रुतं मया शम्भोः सकाशाद् द्विजसत्तम ।
तत्तेहं सम्प्रवक्ष्यामि, सर्व्वपापहरं परम् ॥३॥
गुह्येश्वर्य्या महाभाग, नाम्नामष्टसहस्रकम् ।
तस्य श्रवणमात्रेण, गुह्येशी सुप्रसीदति ॥४॥
अस्य श्रीगुह्येश्वरी अष्टोत्तरसहस्रनामस्तोत्रस्य महादेव ऋषिरनुष्टुप्छन्दो गुह्येशी देवता, ॐबीजं नमः कीलकं गुह्यवासिनी शक्तिश्चतुर्व्वर्गसाधने विनियोगः ।
अचिन्त्याव्यक्तरूपा च, अर्यमा अमलेश्वरी ।
अमृतार्णवमध्यस्था, अर्कमण्डलवासिनी ॥५॥
अव्यक्तलक्षणाक्षोभा, अजरा अमरार्चिता ।
अणिमादिगुणाधारा, अम्बराम्बरधारिणी ॥६॥
अर्धमात्रात्मिका अर्द्धा, अरिषड्वर्गनाशिनी ।
अरविन्दनिभानाथा, अरविन्दनिभेक्षणा ॥७॥
अञ्जनाद्रिप्रतीकाशा, अमराम्बरभूषिता ।
अतिदिक्षाजपाविद्याध्वंसिनी चान्तरात्मिका ॥८॥
अनन्ता अम्बुजाक्षी च, अमावास्या अमातिथीः ।
आदेवी आदिशक्तिराकृतिश्चायतानना ॥९॥
आदित्यमण्डलगता, आदित्यगणसेविता ।
आचार्यरूपा आचारा, आम्रवृक्षनिवासिनी ॥१०॥
आर्द्रा आर्द्रप्रतीकाशा, आकाशान्तरचारिणी ।
आद्यन्तरसमायुक्ता, आरम्भारम्भरूपिणी ॥११॥
आग्नेयी आसनस्था च, आनन्दानन्दविग्रहा ।
आद्यानन्दा आम्रगुणा, आशा आनन्दविग्रहा ॥१२॥
इडा पिङ्गलरूपा च, इन्द्रनीलनिभा इडा ।
इन्दुरूपा इन्दुधरा, इन्द्राणी इन्द्रपूजिता ॥१३॥
इन्द्राक्षी इन्द्रमाता च, इन्दुमण्डलरूपिणी ।
इन्द्रकोदण्डसंयुक्ता, इषुसन्धानकारिणी ॥१४॥
ईश्वरी ईश्वरा ईशा, ईशानत्रयधारिणी ।
ईडा ईडामयी ईला, ईलासन्ततरुप्रिया ॥१५॥
उडुप्रभा उडुमती, उडुमण्डलवासिनी ।
उमा उत्सवसम्पन्ना, उषा उडुनिभानना ॥१६॥
उदकोदकरूपा च, उदयाचलसंस्थिता ।
उदङ्मुखी उदासीना, उदीची उर्वशी उदा ॥१७॥

उरुस्वना उरुश्रोणी, उरु चारुविलोचना ।
ऊर्द्ध्वास्था ऊर्ध्वकेशी च, ऊर्मिलोलविलोचना ॥१८॥
ऊर्ध्वाम्नायस्थिता उर्व्वा, ऋद्धिदा ऋद्धिरूपिणी ।
ऋजुरूपा ऋजुधर्मा, ऋजुमार्गव्यवस्थिता ॥१६॥
ऋग्वेदरूपा ऋणहा, ऋजुधर्मप्रवर्तिनी ।
ऋतुमृती ऋतुमार्गस्था, ऋकाराक्षररूपिणी ॥२०॥
लूनाखिरसम्भूता, लूतादिविपभञ्जिनी ।
लूनार्त्तिहारिणी लूता, ॐकाराक्षररूपिणी ॥२१॥
एका एकान्तमूर्त्तिरेकमानैकनिष्ठिका ।
एकान्तवासिनी एणा, एणशावकलोचना ॥२२॥
ऐन्द्री ऐरावतीरूढा, ऐहिकामुष्मिकप्रदा ।
ॐकारी ह्योषधी ह्योषा, श्रोतप्रोतनिवासिनी ॥२३॥
श्रौर्वी श्रौषधसम्पन्ना, श्रौपासनफलप्रदा ।
अन्तमध्यस्थिता देवी, अन्धकासुरघातिनी ॥२४॥
(अः) कात्यायिनी कालरात्रिः कामाक्षी कामसुन्दरी ।
कमला कासिनी कान्ता, कामदा कालकर्णिका ॥२५॥
करिकुम्भस्तनी कन्या, करवीरसुवासिनी ।
कल्याणी कुण्डलवती, कुरुक्षेत्रनिवासिनी ॥२६॥
अरविन्ददलाकारा, कुण्डली कुमुदालया ।
कालजिह्वा करालास्या, कालिका कालरूपिणी ॥२७॥
कमनीयगुणा कान्तिः, कराधारा कुमुद्वती ।
कौशिकी कमलाधारा, कामचारप्रभञ्जिनी ॥२८॥
कौमारी करुणापाङ्गी, कुन्ददला करिप्रिया ।
केशिनी केशवनुता, कदम्बकुसुमप्रिया ॥२६॥
कालिन्दी कालिकाकाञ्ची, कलशोद्भवसंस्तुता ।
काममाता क्रतुमती, कामरूपा क्रियावती ॥३०॥
कुमाली कुन्दनिलया, किराती कीलवाहना ।
कैकेयी कोकिलालापा, केतकीकुसुमप्रिया ॥३१॥
कमण्डलुधरा क्रूरा, कर्म्मनिर्मूलकारिणी ।
कलहंसगतिः कुब्जा, कृतकौतुकमङ्गला ॥३२॥
कस्तूरीतिलका कम्रा, करीन्द्रगमना कुहुः ।
कर्प्पूरलेपना कृष्णा, कपिला कुहराश्रया ॥३३॥
कूटस्था कूधरा कम्रा, कुक्षिस्थाखिलविष्टपा ।
खड्गखेटधरा खर्वा, खेचरी खगवाहना ॥३४॥
खट्वाङ्गधारिणी ख्याता, खगराजोपरिस्थिता ।
खलघ्नी खण्डितजरा, खडाख्यातिप्रदायिनी ॥३५॥
खण्डेन्दुतिलका गङ्गा, गणेशगुहपूजिता ।
गायत्री गोमती गीता गान्धारी गानलोलुपा ॥३६॥
गौतमी गामिनी गन्धा, गन्धर्वाप्सरसेविता ।
गोविन्दचरणक्रान्ता, गुणत्रयविभाविता ॥३७॥
गन्धर्वी गौह्वरी गात्रा, गिरीशा गहनागमा ।
गुहावासा गुणवती, गुरुपापप्रणाशिनी ॥ ३८ ॥
गुर्वी गुणवती गुह्या, गोपिका गुणदायिनी ।
गिरिजा गुह्यमातङ्गी, गरुडध्वजवल्लभा ॥ ३६ ॥
गर्वापहारिणी गोदा, गोकुलस्था गदाधरा ।
गोकर्णनिलया गुह्या, गुह्यमण्डलवर्त्तिनी ॥ ४० ॥
घर्मदा घनदा घण्टा, घोरदानवमर्द्दिनी ।
घृणिमन्त्रमयी घोषा, घनसम्पातदायिनी ॥ ४१ ॥
घण्टारवप्रिया घोणी, घृणिसन्तुष्टकारिणी ।
घातारिमण्डला घूर्णा, घृताची घनवेगिनी ॥ ४२ ॥
ज्ञानाचारवती चर्चा, चर्विणी चारुहासिनी ।
चतुरा चन्द्रिका चित्रा, चित्रमालाविभूषिता ॥४३॥
चतुर्भुजा चारुदन्ता, चातुरी चरितप्रदा ।
चूलिता चित्रविश्रान्ता, चन्द्राभा चूर्णकुन्तला ॥४४॥
चन्द्रहासा चारुगात्री, चकोरी चन्द्रहासिनी ।
चन्द्रिका चित्रधात्री च,चोरा चौरा च चण्डिका ॥४५॥
चञ्चद्वाग्वादिनी चन्द्रचूडा चन्द्रविलासिनी ।
चारुचन्दनलिप्ताङ्गी, चञ्चच्चामरवीजिता ॥ ४६ ॥
चारुमध्या चारुगतिश्चन्द्रिका चन्द्ररूपिणी ।
चारुभोगप्रियाचार्या, चरिता चक्रधारिणी ॥ ४७ ॥
चन्द्रमण्डलमध्यस्था चन्द्रमण्डलदर्पणा
चक्रवाकस्तनी चेष्टा, चित्रा चारुविलासिनी ॥ ४८ ॥
चित्स्वरूपा चन्द्रवती, चन्द्रमा चन्दनप्रिया ।
चोदयित्री चिरप्रज्ञा, चातकाधान्यहेतुकी ॥ ४६ ॥
छत्रप्रीता च्छत्रधरा, च्छाया च्छेदपरिच्छदा ।
छायादेवी च्छिद्रनखी च्छन्नेन्द्रिया विसर्पिणी ॥५०॥
छन्दोनुष्टुप्प्रतिष्ठान्ता, छिन्द्रोपद्रवच्छेदिनी ।
छन्दोच्छत्रेश्वरीच्छिन्ना, च्छुरिकाच्छेदनक्रिया ॥५१॥
जननी जन्मरहिता, जातवेदो जगन्मयी ।
जान्हवी जटिला जैत्री, जरामरणवर्ज्जिता ॥५२ ॥
जम्बूद्वीपवती ज्योत्स्ना, जयन्ती जयसाधिनी ।
जितेन्द्रिया जितक्रोधा, जितामित्रा जगत्प्रिया ॥५३॥
जातरूपमयी जिह्वा, जानकी जगती जरा ।
जनित्री जन्हुतनया, जगत्त्रयहितैषिणी ॥ ५४ ॥
ज्वालावती जपवती, ज्वालघ्नी जितविष्टपा ।
जिह्वाक्रान्तमहाज्वाला, जाग्रती ज्वलदैवता ॥५५॥
ज्वलन्ती ज्वलदा ज्येष्ठा, ज्याघोषास्फोटदिङ्मुखा ।
जम्भनी जृम्भिणी जम्भा, ज्वलन्मारीककुंडला॥५६॥
झिल्लिकागणनिर्घोषा, झञ्झामारुतवेगिनी ।
झल्लरीवाद्यकुशला, झषरूपा झषध्वजा ॥ ५७ ॥

टङ्कबाणसमायुक्ता, टङ्किणी टङ्कवेगिनी ।
टङ्कीकृतगुणाशेषा, टङ्कनीयमहोदरा ॥ ५८ ॥
टङ्कारकारिणी देवी, टट्टशब्दनिनादिनी ।
डाकिनी डामरी डिम्भा, डुण्डुभानैकवर्जिता ॥५६॥
डामरीतन्त्रमार्गस्था, डमड्डमरुवादिनी ।
डिण्डीरविहसा डिम्भा, डोलक्रीडापरायणा ॥६०॥
दुण्ढीविघ्नेशजननी, ढक्काहस्ता ढिरिप्रिया ।
नित्रिया ज्ञानदाशेषा, तरुणी तरुणीत्रयी ॥६१॥
त्रिगुणा त्रिपदा तन्त्री, तुलसी तुरगासना ।
त्रिविक्रमपदाक्रान्ता, तुरीयपदगामिनी ॥६२॥
तरुणादित्यसङ्काशा, तामसी तुहिनाश्रया ।
त्रिकालज्ञानसम्पन्ना, त्रिवली त्रिविलोचना ॥ ६३ ॥
त्रिशक्तिस्त्रिपुरा तुङ्गा, तुरङ्गवदना तटी ।
तिमिङ्गिलिगिला तीव्रा, त्रिस्रोता तामसार्दिनी ॥६४॥
तन्त्रा तन्त्रविशेषज्ञा, तनुमध्या त्रिपिष्टपा ।
त्रिसन्ध्या त्रिस्तनी तोषा, तास्था तालप्रयातिनी ॥६५॥
ताटङ्किनी तुषाराभा, तुहिनाचलवासिनी ।
तन्तुजालसमायुक्ता, तारहारावलिप्रिया ॥६६॥
तिलफामप्रिया तीर्था, तमालकुसुमाकृतिः ।
तारका त्रिपुरा तन्वी, त्रिशंकुपरिवारिता ॥६७॥
तल्वोदरी तिलाभासा, ताटङ्कोपरिशोभिता ।
त्रिजटा तैत्तिरी तृष्णा, त्रिविधा तरुणाकृतिः ॥६८॥
तप्तकाञ्चनसंकाशा, तप्तकाञ्चनभूषणा ।
त्र्यम्बका च त्रिवर्गा च, त्रिकालज्ञानदायिनी ॥६६॥
तर्पणा तृप्तिदा तृप्ता, तामसी तुम्बुरुस्तुता ।
तार्क्ष्यस्था त्रिगुणाकारा, त्रितुङ्गी तनुवल्लरी ॥७०॥
थकारधारिणी थान्ता, दोहिनी दीनवत्सला !
दानवान्तकरी दुर्गा, दुर्गासुरनिवर्हणी ॥७१॥
देवकी देवमाता च, द्रौपदी दुन्दुभिस्वना ।
देवयानी दुरावासा, दरिद्रच्छेदिनी दिवा ॥ ७२ ॥
दामोदरप्रिया दीप्ता, दण्डिनी देवपूजिता ।
दण्डकारण्यनिलया, देवतादित्यरूपिणी ॥७३॥
देववन्द्या दिविपदा, द्वेपिणी दानवाकृतिः ।
दीनानाथस्तुता दीक्षा, दिग्वासा देवमोहिनी ॥७४॥
धात्री धनुर्धरा धेनुर्धरणी धर्मचारिणी ।
धुरन्धरधराधारा, धनदा धान्यदोहिनी ॥७५॥
धर्मशीला धनाध्यक्षा, धनुर्वेदविशारदा ।
धृतिधन्या धृतिपदा, धर्मराजप्रिया ध्रुवा ॥७६॥
धूमावती धूमकेशी, धर्मशास्त्रप्रवर्त्तिनी ।
नन्दा नन्दप्रिया निद्रा नुन्नता नन्दनात्मिका ॥७७॥

निर्म्मदा नलिनी नीला, नीलकण्ठसमाश्रया ।
नारायणप्रिया नित्या, निर्म्मला निर्गुणा निधिः ॥७८॥
निराधारा निरुपमा, नित्यशुद्धा निरञ्जना ।
नादबिन्दुकलातीता, नादबिन्दुकलात्मिका ॥७६॥
नारसिंही नगधरा, नृवरा नागभूषणा ।
नरकक्लेशशमनी, नारायणपदोद्भवा ॥८०॥
नीरवन्द्या निराकारा, नारदप्रियकारिणी ।
नाना ज्योतिःपदाख्याता, निदाधि(राधिः)निर्म्मलात्मिका
नवसूत्रधरा नीतिर्निरुपद्रवकारिणी ।
नदजा नवरत्नाढ्या, नैमिषारण्यवासिनी ॥८२॥
नवनीतप्रिया नारी, नीलजीमूतनिस्वना ।
निमेषाद्या नदीरूपा, नीरग्रीवा नरेश्वरी ॥८३॥
नानावरी निशुंभघ्नी, नागलोकनिवासिनी ।
नवजाम्बूनदप्रख्या, नागलोकाधिदेवता ॥८४॥
नूपुरक्रान्तचरणा, नरचित्तप्रमोदिनी ।
निमग्नरक्तनयना, निर्घातसमनिस्वना ॥८५॥
नन्दनोद्याननिलया, निर्व्यूहोपरिचारिणी ।
पार्वती परमामोदा, पञ्चब्रह्मात्मिका परा ॥८६॥
पञ्चकोशविनिर्मुक्ता, पञ्चपातकनाशिनी ।
परचित्तविधानज्ञा, पञ्चिका पञ्चरूपिणी ॥८७॥
पूर्णिमा परमा प्रीतिः, परतेजोऽपकर्षिणी ।
पुराणी पौरुषी पुण्या, पुण्डरीकनिभेक्षणा ॥८८॥
पातालतलनिर्मग्ना, प्रीताप्रीतविवर्धिनी ।
पावनी पदनीहारा, पेशला पाकशासना ॥८६॥
प्रजापतिपरिश्रान्ता, पर्वतस्तनमण्डला ।
पद्मप्रिया पद्मसंस्था, पद्माक्षी पद्मसम्भवा ॥६०॥
पद्मपत्रा पद्मपदा, पद्मिनी प्रियभाषिणी ।
पशुपाशविनिर्मुक्ता, पुरन्ध्री पुरशासनी ॥६१॥
पतिव्रता पवित्राङ्गी, पुष्पवासपरायणा ।
पुष्करा पुरुषा पर्वा, पारिजातसुमप्रिया ॥६२॥
प्रज्ञावतीसुता पौत्री, पत्रपूजा पयस्विनी ।
पट्टीपाशधरा पङ्क्तिः, पितृलोकप्रदायिनी ॥६३॥
पुराणी पुण्यशीला च, प्रणतार्त्तिविनाशिनी ।
प्रद्युम्नजननी प्रौढा, पितामहपरिग्रहा ॥६४॥
पुण्डरीकपुरावासा, पुण्डरीकनिभानना ॥६५॥
पृथुजङ्घा पृथुभुजा, पृथुपादा, पृथूदरी ।
प्रवालशान्ता पिङ्गाक्षी, पीतवासा पिलीपला ॥६६॥
पर्जन्यभीमरूपा च, पर्जन्याधिकशीतला ।
पुराणवेदगम्या च, पुराणवेददन्दिता ।
पद्मरागप्रतीकाशा, पद्मरागस्वरूपिणी ॥६७॥

पद्माक्षी पद्मपत्राक्षी, पद्ममालाविभूषिता ।
पाञ्चाली पञ्चनीपञ्चा, पञ्चाननहृदयमोहिनी ॥९८॥
पञ्चकूटस्थिता प्राची, पञ्चाननविवाहिनी ।
पाशिनी पाशहस्ता च, पशुपाशविनाशिनी ॥९९॥
पशुपाशसमुच्छेदकारिणी, पशुघातिनी ।
परश्वा परशुहस्ता च, परलोकभयापहा ॥१००॥
फलिनी फलहस्ता च, फलाफलफलप्रदा ।
फणिकङ्कणहस्ता च, फणिनूपुरधारिणी ॥ १ ॥
फुत्कारकारिणी फेरुः, फुलिङ्गा च फुलिङ्गिनी ।
फलदा फलदात्री च, फणिहस्ता फणामणिः ॥ २ ॥
विश्वेश्वरी च विश्वासा, विश्वपापविनाशिनी ।
विशालाक्षी विशालाक्षा, विशालमुक्तिधारिणी ॥ ३ ॥
विम्बाधरा विम्बरूपा, विश्वा विद्या विनोदिनी ।
वेदगम्या वेदवन्द्या, वेदवेदाङ्गपारगा ॥ ४ ॥
वेदाङ्गी वेदरूपा च, वेदमन्त्रस्वरूपिणी ।
वासिनी वासिनी वश्या, वसुदा वसुदायिनी ॥ ५ ॥
वसुदा वसुराध्या च, वसुदानपरायणा ।
वासवी वासवाराध्या वामदेवविलासिनी ॥ ६ ॥
बहुदा बहुरूपा च, बहुबाहुविलासिनी ।
बहुनेत्रा बहुलास्या, बहुहस्ता बहुस्तना ॥ ७ ॥
बह्वा बह्वानना बाला बहुविघ्नविनाशिनी ।
वल्लवी वल्लव प्रीतिर्वलिनी बहुरूपिणी ॥ ८ ॥
बलाराध्या बलारातिर्वलवैरिनिषेविता ।
वाद्यप्रिया वाद्यलता, वीणावादनतत्परा ॥ ९ ॥
वामदेवप्रिया वामी, वासुदेवाभिवन्दिता ।
वारणा वारणाधारा, वरवाटिविहारिणी ॥१०॥
वारण्या वरदा वन्या, वनमालाविभूषणा ।
बलाका वालिनी वीरा, वैद्यशास्त्रविशारदा ॥११॥
वाराही वारुणी वीरा, वाक्पतिश्च वरप्रदा ।
वसुधा वसुपात्री च, वसुवासुकिरूपिणी ॥१२॥
वाग्देवी वक्ररूपा च, वेदवादेविनोदिनी ।
वन्दनीया वरारोहा, वराङ्गी वरलोचना ॥१३॥
वरास्या वरहस्ता च, वरदा वरशालिनी ।
वृन्दा वृन्दारकाराध्या, वृन्दावनविहारिणी ॥१४॥
वरुणा वरुणाराध्या, वरुणानन्ददायिनी ।
ब्रह्मरूपा ब्रह्ममूर्तिर्ब्रह्माणी ब्रह्मसंस्तुता ॥१५॥
ब्राह्मी ब्रह्ममयी ब्रह्मा, ब्रह्मानन्दस्वरूपिणी ।
वैष्णवी विष्णुरूपा च, विष्णुचित्तप्रियङ्करी ॥१६॥
विद्या विद्याधराराध्या, विद्यामन्त्रस्वरूपिणी ।
विशदा विशदाचारा, विशदानन्ददायिनी ॥१७॥
विपुला विपुलश्रोणी, विपुलस्तनमण्डला ।
विमला विमलाङ्गी च, विमलाचारसंस्थिता ॥१८॥
विशिष्टागम्यसुरतिर्वसिष्ठा वसुवेष्टिता ।
विकाशिनी विकाशाद्या, विकचाम्बुजलोचना ॥१९॥
वशिष्ठी वारुणी विश्वा, वैश्वानरप्रिया सदा ।
वाराणसीपराराध्या, विश्वाविश्वस्वरूपिणी ॥२०॥
भूतिर्भगवती भव्या, भवानी भववल्लभा ।
भूतधात्री भूतमाता, भूतिदा भूतिदायिनी ॥२१॥
भवप्रिया भवानन्दा, भवभीतिविनाशिनी ।
भीमा भीमस्वरूपा च, भीमभूतगणावृता ॥२२॥
भूषा भूषणरूपा च, भुवनाभयकारिणी ।
भुवना भुवनाराध्या, भाविनी भुवनेश्वरी ॥२३॥
भेरुण्डा भैरवी भीमा, भार्गवी भार्गवस्थिता ।
भयदा भयहन्त्री च, भवनाथा भयङ्करी ॥२४॥
भीतिर्भी भयहन्त्री च, भूताचारभयास्थिता ।
भाग्या भगवती भागी, भाग्यदा भाग्यमालिनी ॥२५॥
भागिनी भागिनी भागा, भगानन्दा भगोदरी ।
भगदा भगरूपा च, भवदात्री भवार्दिता ॥२६॥
भूतिर्भूमिर्भ्रमी भ्राभूर्भ्रुकुटीकुटिलेक्षणा ।
भ्रान्तिहा भ्रान्तिदा भ्रातिर्भाविनी भृगुवन्दिता ॥२७॥
भरणा भवनाधारा, भारवी भारधारिणी ।
भवापहा भवाधारा, भवभारविनाशिनी ॥२८॥
भुजभूर्भुजभाकारा, भाविनी भवभाविनी ।
भगलक्ष्मीर्भगाधारा, भगसारा भगाङ्गणा ॥२९॥
भगमूर्तिर्भगप्रीतिर्भगभागवती भगा ।
भुजङ्गहारकण्ठी च, भुजङ्गाङ्गदशोभिता ॥३०॥
भुजङ्गपाशहस्ता च, भुजङ्गभोगमण्डिता ।
भोगदा भागदात्री च, भुक्तिमुक्तिप्रदायिनी ॥३१॥
भुजगी भुजगीयुक्ता, भगभाग्यपरा भया ।
भक्तानुकम्पिनी भक्ता, भक्तानुरक्तमानसा ॥३२॥
भक्तिगम्या भक्तिसाध्या, भक्तानामार्त्तिनाशिनी ।
महामायामहाविद्या, महायोगेश्वरेश्वरी ॥३३॥
मानदा मानिनी मान्या, माननीया महेश्वरी ।
महेश्वरी महावक्त्रा, महापातकनाशिनी ॥३४॥
महामान्या महामन्त्रा, महाकिल्विषनाशिनी ।
महामान्या महादेवी, महामन्त्रस्वरूपिणी ॥३५॥
महारूपा महाकान्तिर्महालक्ष्मीर्महामतिः ।
महातुष्टिर्महापुष्टिर्महावृत्तिर्महाधृतिः ॥३६॥
महाकीर्तिर्महापूर्तिर्महामूर्त्तिर्महामतिः ।
मया मायावती माता, महामायास्वरूपिणी ॥३७॥

मोदिनी मोदिनी मत्ता, मधुपानपरायणा ।
मातङ्गी मत्तमातङ्गी, मातङ्गकुलमण्डिता ॥३८॥
मदालसा मदामत्ता, मदघूर्णितलोचना ।
मधुरा मधुराङ्गी च, मधुरोष्ठी मधुप्रिया । ३९॥
मधुरा मधुरावाचा, मधुपानविहारिणी ।
मन्दोदरी च मन्दा च, मन्दैकगणलालसा ॥४०॥
मन्दारदामभूषाङ्गी, मन्दारवनचारिणी ।
मदना मदनाधारा, मदनालसलोचना ॥४१॥
मदनी मादिनी माना, मदनान्तककामिनी ।
मञ्जुस्वरा मञ्जुवक्त्रा, मञ्जुमञ्जीरधारिणी ॥४२॥
माधवी माधवाधारा, माधवानन्ददायिनी ।
मानदा मानशीला च, मानमान्या मनस्विनी ॥४३॥
मित्रदा मित्ररूपा च, मित्रामुक्तिस्वरूपिणी ।
मधुकरी मधुप्रीतिर्मधुमत्तमलस्वना ॥४४॥
मधुहा मधुहन्त्री च, मधुसूदनवन्दिनी ।
माहेन्द्री मोहनीया च, माहेन्द्रवन्दिता मही ॥४५॥
महिषघ्नी महामान्या, महिषासुरमर्दिनी ।
मर्दिनी मालिनी मान्या, मेनका मूर्त्तिरूपिणी ॥४६॥
मृणाली कोमलाङ्गी च, मृणालभुजवल्लरी ।
मृणालहारमाला च, मरालमदगामिनी ॥४७॥
माहेषी महिषारूढा मृत्युभीतिक्षयङ्करी ।
याज्ञसेनी यज्ञसेनी यज्ञाङ्गी यज्ञरक्षिका ॥४८॥
यज्ञमाता यज्ञभोक्त्री, यज्ञेशी यज्ञरक्षिका ।
यामिनी यमुना याम्या, यया याया यया यया ॥४९॥
यशस्विनी यशःपूर्णा यशोदा यशसान्विता ।
यमुना यमदूती च यमरूपा यमोपमा ॥५०॥
यमद्वारा यमारातिर्यमातार्यमाविता ।
यमनीया च यानाङ्गी यातायातस्वरूपिणी ॥५१॥
यविनी यवरूपा च यवदा यवधारिणी ।
यवभोक्त्री यवावाणी यमनूर्तिस्वरूपिणी ॥५२॥
योगाढ्या योगसंयुक्ता योगदा योगशालिनी ।
योनिरूपा योनियुक्ता, योजनीया च योजनी ॥५३॥
रतिरूपा रतिरामा रजनी राजनी रमा ।
रमणी रामणी रामा रतिरूपा रतिप्रिया ॥५४॥
रक्ता नीरक्तवरणा रक्तानुरक्तमानसा ।
रसा रसवती वाला रसभोक्त्री रसस्वना ॥५५॥
रसाङ्गी रसविस्तीर्णा रसना रसानावती ।
रूपिणी रूपसंयुक्ता रूपी रूपमती रुची ॥५६॥
रञ्जिनी रागिणी राज्ञी राजराजनिषेविता ।
राज्ञी राजती राजी, राजीवचारुलोचना ॥५७॥
राजीवचारुवदना, राजसी राजसोत्तमा ।
रजस्था रजसाधारा, रजोमूर्ती रजोन्विता ॥५८॥
रम्या रमणसम्पन्ना, रघुनाथप्रियङ्करी ।
रामाराध्या रमामूर्ती रमणीया रमोत्तमा ॥५९॥
रक्ताम्बरा च रक्ताक्षी, रक्तपद्मविलोचना ।
रक्तपद्मस्थिता रक्ता, रक्तपद्मनिवासिनी ॥६०॥
रक्तपद्मधारा रक्तपद्मासननिवासिनी ।
रेवती रोहिणी रौद्री रुद्राणी रुद्रकामिनी ॥६१॥
रुद्राक्षमालिनी रुद्रा रुद्रमूर्त्तिस्वरूपिणी ।
राध्या राध्यतमा राध्यराधिका रामवत्सला ॥६२॥
रुचिरा रुचिराङ्गी च रुचा रुचिकरी रुचिः ।
रुचनेत्रा रुचिराक्षी भैरवी चर्मवासिनी ॥६३॥
रौरवान्तकरी रेखा रक्षा राक्षसस्वरूपिणी ।
लम्बोदरी च लम्बोष्ठी लम्बवक्त्रा च लम्बिनी ॥६४॥
लम्बस्तनी लम्बहस्ता लम्बोदरनिषेविता ।
लक्ष्मीर्लक्ष्मीस्वरूपा च, लक्ष्मीनाथप्रियङ्करी ॥६५॥
लक्षणालक्षणालक्षा, लाक्षालोहितलोचना ।
लता च लतिका बाला, लवङ्गी लाहितेक्षणा ।६६।
लीला लीलावती लीला, लालना लसनावती ।
लाङ्गली लाङ्गलाधारा, लाङ्गलीपरिवन्दिता ॥६७॥
लिपिर्लिपिमयी लेखा लिपिमूर्तिस्वरूपिणी ॥६८।
ललना ललनीलोला लङ्केश्वरनिषेविता ।
ललिता ललिताङ्गी च, ललितालकशालिनी ॥६९॥
ललिता ललिताक्षी च, ललनागणसेविता ।
लालसा लालिनी लास्या, लवलास्यपरायणा ।
शान्तिः शान्तिकरी शान्ता, शीता शीर्षशशी शिवा ।
शीतार्द्रशीतलरूपा शीतलाङ्गी शुभाशुभा ।
शांकरी शंकरप्रीता शिवा शिववनितम्बिनी ॥७१॥
शिवदा शिवरूपा च शिवोपरिनिषेदुषी ।
शाम्भवी शम्भुरूपा च शाश्वती च सरस्वती ॥७२॥
शान्ता शान्तोदरी शान्ता, शान्तिः शान्तिप्रदायिनी ।
शारदा शारदा ज्योत्स्ना शारदीया शतानना ॥७३॥
सीमन्ता साविनीशा च सामगानप्रकाशिनी ।
सामस्वती सतानन्दा, सतानन्दातिनन्दिता ॥७४॥
सीता सुवदना साध्वी शीतपानपरायणा ।
शर्वरी शर्वरीरूपा शिवाशवविनोदिनी ॥७५॥
सीमन्तिनी च सीमन्तवीर्या सीमन्तसेविता ।
शैवी शिवरूपा च शिशुभिः परिवेष्टिता ॥७६॥
षण्मुखी षण्मुखीमाता, षडाननिषेविता ।
षडङ्गयोगगम्या च पर्वा पर्वस्वरूपिणी ॥७७॥

सुन्दरा सुन्दरी शुक्रा सुन्दरीगणसेविता ।
सुधाधारा सुधात्राणा सुधामधुररूपिणी ॥७८॥
सुरेश्वरी सुरानन्दा सुरासुरनिषेविता ।
सुरारिदलिनी सारा सौन्दर्यशालिनी सती ॥७९॥
शुम्भहा शुम्भदलिनी सर्वमङ्गलमङ्गला।
सर्वाणी सर्वदात्री च सर्वा सर्वस्वदायिनी ॥८०॥
सर्वेशी सर्वजननी, सर्वान्दस्वरूपिणी ।
सर्वसौन्दर्ययुक्ता च सर्वसौन्दर्यदायिनी ॥८१॥
सर्वदुःस्वप्नसमनी सर्वमृत्युप्रणाशिनी ।
सर्वविघ्नविनाशा च सर्वमङ्गलदायिनी ॥८२॥
सर्वकामप्रदा सर्वासर्वानन्दप्रदायिनी ।
सर्वैश्वर्यस्वरूपा च सर्वैश्वर्यप्रदायिनी ॥८३॥
सर्वपापप्रशमनी सर्वपातकनाशिनी ।
सर्वज्ञानस्वरूपा च सर्वज्ञा सर्वदर्शना ॥८४॥
सर्वार्थसाधिनी सिद्धा सिद्धचारणसेविता ।
सर्वदेवस्वरूपा च सर्वदेवमयी शुभा ॥८५॥
सर्वाङ्गसुन्दरी सुश्रीः सर्वसौभाग्यदायिनी ।
सर्वकामप्रवीणा च सर्वकामप्रसाधिनी ॥८६॥
सर्वकल्याणयुक्ता च, सर्वाभरणभूषिता ।
सर्वशृङ्गारवेशाढ्या, सर्वसम्पत्तिदायिनी ॥८७॥
समारूपा समीमूर्तिः समीशमप्रवर्त्तिनी ।
सागरा सागरासाध्या, सागरालयवन्दिता ॥८८॥
स्वरूपा सुस्वरूपा च स्वकान्तिकुचमण्डला ।
सुमतिः सुमतिप्रख्या सुमतेर्दायिनी सुधा ॥८९॥
सकला सकलाधारा सकलानन्ददायिनी ।
सुचिन्ता सुचरित्रा च, सुपुण्याजनवन्दिता ॥९०॥
सावित्री च सवित्री च सवितृमूर्त्तिपूजिता ।
सुमना सुमनाराध्या सुमनागणवन्दिता ॥९१॥
शामिनी समनी शामा सामान्यजनभाविता ।
स्वर्णप्रभा स्वर्णवर्णा स्वर्णाचलनिवासिनी ॥९२॥
स्वर्गदा स्वर्गरूपा च स्वर्गभाग्यप्रदायिनी ।
स्मरारिप्राणदात्री च स्मरारिहृदयप्रिया ॥९३॥
स्मृतिः स्मृतिस्वरूपा च, स्मृतिगम्या स्मृतिप्रिया ।
स्मृतिगम्या स्मृतिप्राणा, स्मृतिश्रुतिस्वरूपिणी ॥९४॥
स्मररूपा स्मराराति:, स्मरजीवनदायिनी ।
स्मरणोन्मादिनी स्मारा, स्मरांकुरितमानसा ॥९५॥
सरसा सरसाङ्गी च, सरसीभारसारिणी ।
सारसाचारसन्तुष्टा, सारङ्गचारुलोचना ॥९६॥
संसारसारसंसारा, संसारभयहारिणी ।
संसारनिस्तारकर्त्री, संसारपापनाशिनी ॥९७॥
संसारमूलशक्तिश्च, संसारसाररूपिणी ।
सर्वसङ्ग्रामजयिनी, सर्वशक्तिस्वरूपिणी ॥९८॥
सुमुखी च सुवक्षोजा, सुचारुकुटिलेक्षणा ।
सुभ्रूरुसुवचोवीची, सुनासा सुविलोचना ॥९९॥
सर्वव्याधिप्रशमनी, सर्वविघ्नविनाशिनी ।
सर्वारम्भसमारम्भा, सर्वसंभाररूपिणी ॥२००॥
सालसाङ्गी सालकास्या, महार्थार्थसुसाधिनी ।
सर्वमुक्तिस्वरूपा च, सर्वरक्षास्वरूपिणी ॥ १ ॥
हेमा हैमवती हैमी हिमाचलनिवासी ।
हिमाचलसुता हीरा हेमालङ्कारधारिणी ॥ २ ॥
हिता हितार्थसंयुक्ता हितकर्त्री हितार्थदा ।
हरधीश्च हराराध्या हरानन्दा हरोत्सुका ॥ ३ ॥
हारिणी हारसम्पन्ना हरिहारविभूषणा ।
हरिणी हररूपा च हरिराजनिवासिनी ॥ ४ ॥
हारस्था हरियुक्तिश्च ह्रींकाराक्षररूपिणी ।
क्षमा क्षमावती क्षान्तिः क्षेत्रधर्मप्रवर्धिनी ॥ ५ ॥
क्षोणी क्षोभस्वरूपा च क्षुधाक्षीमूर्त्तिधारिणी ।
क्षयिणी क्षयकर्त्री च क्षयकरी क्षयङ्करी ॥ ६ ॥
क्षेमङ्करी क्षेममूर्त्तिः क्षमाक्षान्तिक्षयाक्षमा ।
इतीदं परमं गुह्यं, नाम्नामष्टसहस्रकम् ॥ ७ ॥
गुह्येश्वर्या महाभाग, शिवेनोक्तं घटोद्भव ।
एतस्य पठनाद्वापि, धारणाद्वा विशेषतः ॥ ८ ॥
शिवतुल्यो भवेद्विप्र, नात्र कार्या विचारणा ।
पुत्रार्थी पुत्रमाप्नोति, धनार्थी लभते धनम् ॥ ९ ॥
कन्या वरमवाप्नोति, वरः कन्यामनुत्तमाम् ।
विद्यार्थी लभते विद्यां, मुक्त्यर्थी मुक्तिमाप्नुयात् ।१०।
वन्ध्यापि लभते पुत्रमेतस्य श्रवणाद्विज ।
राजानो राजपुत्राश्च, वशमायन्ति दर्शनात् ॥११॥
यः पठेत्पाठयेद्वापि, शृणुयाद्वापि यो नरः ।
प्रातः कालेऽथ मध्यान्हे, सायंकालेथवा पुनः ॥१२॥
निशीथे वापि पठनात्, गुह्येशी सुप्रसीदति ।
इदं गुह्यतरं देव्याः शिववक्त्राद्विनिर्गतम् ॥१३॥
यस्मै कस्मै न दातव्यं, न वक्तव्यं कदाचन ।
अत्यन्तगुरुभक्ताय, दान्ताय सत्यवादिने ॥१४॥
भक्तियुक्ताय दातव्यं, ब्राह्मणाय विशेषतः ।
अष्टम्यां च चतुर्दश्यां, नवम्यां भौमवासरे ॥१५॥
एतस्य पठनाद्देवि, रुद्रतुल्यो भवेन्नरः ॥१६॥

इति श्रीस्कन्दपुराणे हिमवत्खण्डे गुह्येश्वरीसहस्र-
नामस्तोत्रं सम्पूर्णं समाप्तम्